# मदनपालनिघण्टुः ।

[श्री]मन्मदनपाल नृपतिना विरचितः ।

पण्डितकुलपति

[जीव]ानन्द विद्यासागर भट्टाचार्य्यात्मजेन

[पण्डि]त श्रीआशुबोध विद्याभूषण भट्टाचार्य्येण

तथा

[प]ण्डित श्रीनित्यबोध विद्यारत्न भट्टाचार्य्येण

[स]परिवर्द्धित, परिवर्त्तित, संस्कृत, संशोधित

प्रकाशितश्च ।

तृतीय संस्करणम् ।

कलिकाताराजधान्याम्

एम, एस श्रीदक्षिणाचरण चक्रवर्त्तिना

मुद्रित ।

१८०२ ।

अथ मदनपालनिघण्टौ वर्गानुक्रमेण

# सूचीपत्रम्।

सूचीपत्र सम्पूर्णम्।

—•—

# सर्वौषधिनामगुणानाम्
# निघण्टुः ।

## मङ्गलाचरणम् ।

बीजं श्रुतीनां सघनं सुनीनां
जीवं जडानां महदादिकानाम् ।
धार्व्वेयमस्त्रं भवपारकाणां
किञ्चिन्महः श्याममहमाश्रयामि ॥ १ ॥

लुब्धा कपोलमधुपारिमधुव्रतालौ
कुम्भस्थलौ मधुविभूषणलोहिताङ्गौ ।
माणिक्यमौक्तिकौरिव राजति यस्य मौलौ
विघ्नं स धूनयतु विघ्नपतिः सदा नः ॥ २ ॥

यो ध्वान्तमत्यतिगभीरपयोधिमध्या-
न्निष्काशयत्यशरणं भुवनं निमज्जत् ।
दत्वा जगत्सदयहितः स्वकरावलम्बं
वाञ्छां स वो दिनकरः सफलीकरोतु ॥ ३ ॥

मिथ्यागमादिकृतदोषपथे न कोपा-
मभ्युद्धरन्ति उपद्रवमत्रभीमे ।
रोगाम्बुधौ भवजनस्य निमज्जतो यः
पोतः प्रयच्छतु शुभानि स काशिराजः ॥ ४ ॥

केचित्सन्ति निघण्टवोऽतिमाधवः केचिन्महान्तः परे
केचिद् दुर्गमनामकाः कतिपये भाषाः स्वभावोज्झिताः ।
सम्राद्यानिमधुरं चातिविपुलः ख्यातादिनाम्ना मतां
धीस्थे द्रव्यगुणाभिधोऽयमधुना ग्रन्थो मया बध्यते ॥ ५ ॥

सर्वं कायेन संसाध्यं तस्यायुः स्थितिकारणम् ।
आयुर्वेदोपदेशस्तु कस्य न स्यात् फलावहः ॥ ६ ॥
तत्रापि पूर्वं ज्ञातव्या द्रव्यनामगुणागुणाः ।
अतस्त एव वक्ष्यन्ते तज्ज्ञाने हि क्रियाक्रमः ॥ ७ ॥

अथ हरीतकीनामगुणाः ।

हरस्य भवने जाता हरिता च स्वभावतः ।
हरयेत् सर्वरोगांश्च तेन प्रोक्ता हरीतकी ॥ ८ ॥
जीवन्ती पूतना पथ्यादमृता विजयाभया ।
रोहिणी चेतकी सप्तभेदभिन्ना हरीतकी ॥ ९ ॥
जीवन्ती जीवनीयोगात् पावनात् पूतनामृता ।
सुधावदमृता ज्ञेया विजया विजयप्रदा ॥ १० ॥
नृणामभयदा यस्मादभया तत् प्रकीर्त्तिता ।
रोहिणी तु गुणारोहाचेतनाचेतकी मता ॥ ११ ॥
जीवन्ती स्वर्णवर्णाभा पूतनास्थिमती मता ।
अमृता त्रिदला प्रोक्ता विजया तुम्बरूपिणी ॥ १२ ॥
पञ्चाङ्गी त्वभया ज्ञेयामृता हृत्ता तु रोहिणी ।
त्र्यङ्गी तु चेतकी ज्ञेया कर्म्म तासामथोच्यते ॥ १३ ॥
सर्वरोगेषु जीवन्ती प्रलेपे पूतना हिता ।
शुद्ध्यर्थममृता प्रोक्ता विजया सर्वरोगहृत् ॥ १४ ॥
अक्षिरोगेऽभया शस्ता रोहिणी व्रणरोहिणी ।
चेतकी चूर्णयोगे स्यात् सप्तधैव प्रकीर्त्तिता ॥ १५ ॥
नवा स्निग्धा घना हृत्ता गुर्वी क्षिप्ता च याम्भसि ।
निमज्जेत् सा प्रशस्ता स्याद्रोगघ्नोति गुणप्रदा ॥ १६ ॥
श्रीणाच्छिन्ना गुडनिभा किञ्चिदम्ला कषायणी ।
स्थूलत्वक् सरसा स्वल्पबीजा गुर्वी हरीतकी ॥ १७ ॥
चर्विता वर्द्धयत्यग्निं पेषिता मलशोधिनी ।

स्त्रिया सङ्ग्राहिणी पथ्या भेत्री प्रोक्ता त्रिदोषनुत् ॥१८॥
ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनद्धेऽम्बरे
तुल्यां शर्करया शरद्यमलया शुण्ठ्या तुषारागमे ।
पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजिता
राजन् ! प्राप्य हरीतकीमिव रुजो नश्यन्ति ते शत्रवः ॥१९॥
शिवा हरीतकी पथ्या चेतकी विजया जया ।
अव्यथा अभया मोघा कायस्था प्राणदाऽमृता ॥ २० ॥
जीवनीया हैमवती पूतना हतनाभया ।
वयस्था नन्दिनी श्रेया श्रेयसी रोहिणी तथा ॥ २१ ॥
हरीतकी पञ्चरसा लवणा तुवरोत्कटा ।
रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी ॥ २२ ॥
सरा बुद्धिप्रदा हृद्या चक्षुष्या बृंहणी लघुः ।
श्वासकासप्रमेहार्शःकुष्ठशोफोदरान् कृमीन् ॥ २३ ॥
वैस्वर्यग्रहणीदोषविबन्धविषमज्वरान् ।
गुल्माध्मानव्रणच्छर्दिहिक्काकण्डूहृदामयान् ॥ २४ ॥
कामलां शूलमानाहं प्लीहानं चापकर्षति ।
मधुराम्लतया वातं कषायत्वाद्भावतः ।
पित्तं हन्ति कफं हन्ति कटुकेन हरीतकी ॥ २५ ॥

अथ आमलकनामगुणाः ।

धात्रीफलामृतफलमामलकं श्रीफलं शिवम् ।
तद्वद्धात्रीफलं हृद्यं विशेषाद्रक्तपित्तजित् ॥ २६ ॥
अम्लत्वात् पवनं हन्ति पित्तं माधुर्यशैत्यतः ।
कफं रूक्षकषायत्वात् तस्मात् किमधिकं फलम् ॥२७॥

अथ विभीतकनामगुणाः ।

विभीतकः कर्षफलो भूतावासः कलिद्रुमः ।
वासन्तोऽक्षो हरजातः सपर्णास्तिमपुष्पकः ॥ २८ ॥

विभीतकः स्वादुपाकः कषायः कफपित्तनुत्।
उष्णवीर्य्यो हिमस्पर्शो भेदनः कासनाशनः।
रूक्षो नेत्रहितः केश्यो मज्जा तोयदकारकः ॥२९॥

## अथ त्रिफलानामगुणाः।

हरीतक्यास्त्रयो भागा शिवा द्वादशभागिका।
षड्भागाः स्युर्विभीतस्य त्रिफलेयं प्रकीर्त्तिता ॥३०॥
पित्तं माधुर्य्यशैत्यन्तु कफं रूक्षकषायनुत्।
त्रिफलैतत्त्रयेण स्याद्वरा श्रेष्ठा फलोत्तमा ॥ ३१ ॥
त्रिफला कुष्ठमेहार्शःकफपित्तविनाशिनी।
चक्षुष्या रोपणी हृद्या वयसः स्थापिनी परा ॥ ३२ ॥

## अथ भूधात्रीनामगुणाः।

भूधात्री बहुपत्री स्यादमृतामलका शिवा।
भूधात्री वातकृत्तिक्ता कषाया मधुरा हिमा।
पिपासाकासपित्तास्रकृमिपाण्डुक्षतापहा ॥ ३३ ॥

## अथ प्राचीनामलकीनामगुणाः।

प्राचीनामलको प्राची नागरं रक्तकं मतम्।
तत्पक्वं पित्तकफकृत् उष्णं गुरुसमीरजित् ॥ ३४ ॥

## अथ उत्पाटारूपकनामगुणाः।

अरूपकेणावदासा वृषा सिंहमुखी भिषग्।
सिंहपर्णी वृषो वासा सिंहकोत्पाटरूपकः ॥ ३५ ॥
वासको वातकृत्स्वर्य्यः कफपित्तास्रनाशनः।
श्वासकासज्वरच्छर्दिमेहकुष्ठक्षयापहः ॥ ३६ ॥

## अथ गुडूचीनामगुणाः।

गुडूची कुण्डली छिन्ना वयस्थामृतवल्लरी।
छिन्नोद्भवा छिन्नरुहामृता ज्वरविनाशिनी ॥ ३७ ॥
वत्सादनी चन्द्रहासा जीवन्ती चक्रलक्षणा।

गुडूची कटुका तिक्ता स्वादुपाका रसायनी ॥ ३८ ॥
संग्राहिणी कषायोष्णा लघ्वी बल्याग्निदीपिनी ।
कामला कुष्ठवातास्रज्वरपित्तक्रमीन् जयेत् ॥ ३९ ॥
घृतेन वातं सगुडा विबन्धं पित्तं सिताढ्या मधुना कफञ्च ।
वातास्रमुग्रं रुबुतैलमिश्रा शुण्ठ्यामवातं शमयेद्गुडूची ॥४०॥

अथ बिल्वनामगुणाः ।

बिल्वः शलाटुः शैलूषो मालूरश्च सदाफलः ।
लक्ष्मीफलो गन्धगर्भः शाण्डिल्यः कण्टकी मतः ॥ ४१ ॥
बिल्वं ग्राहि कषायोष्णं कटु दीपनपाचनम् ।
हृद्यं बाल्यं लघु स्निग्धं तिक्तं वातकफापहम् ॥४२॥
हृद्यं गुरु त्रिदोषं स्यात् दुर्जरं पूतिमारुतम् ।
विदाहि विष्टम्भकरं मधुरं वह्निमान्द्यकृत् ।
अष्ठीकफवातामशूलघ्नी बिल्वपेषिका ॥ ४३ ॥

अथ अरणिनामगुणाः ।

अग्निमन्थो जयः केतुरररणिर्वैजयन्तिका ।
अग्निमन्थः श्वयथुघ्नोर्ष्णवीर्यः कफवातनुत् ॥ ४४ ॥

अथ पाटलानामगुणाः ।

पाटला कामदूतिः स्यात् कुम्भिका कालवृन्तिका ।
अम्बुवासा मधोर्दूती ताम्रपुष्पामृताभिधा ॥ ४५ ॥
अमरा फलेरुहा च सा कुम्भिका श्वेतपाटला ।
पाटलारुचिशोथार्शः श्वासहृत् छर्दिनाशिनी ॥ ४६ ॥
तत्पुष्पं मधुरं स्याद् तत्पुष्पं कफरक्तनुत् ।
पित्तातिसारदाहघ्नं फलं हिक्कास्रपित्तनुत् ॥ ४७ ॥

अथ काश्मरीनामगुणाः ।

काश्मरी सर्वतोभद्रा श्रीपर्णी मधुपर्णिका ।
गम्भारी काश्मरी पीता काश्मर्या भद्रपर्णिका ॥४८॥

काश्मरी ज्वरशूलघ्नी वीर्य्योष्णा मधुरा गुरुः ।
तत्पुष्पं वातलं ग्राहि पित्तास्रक्प्रदरापहम् ॥४८॥
फलं रसायनं केश्यं बृंहणं शुक्रलं गुरु ।
वातपित्तचयक्षयारक्तशूलविबन्धनुत् ॥ ५० ॥

अथ श्योनाकनामगुणाः ।

श्योनाकः पृथुशिम्बिः स्यात् शुकनासः कुटन्नटः ।
भूतवृक्षश्च कट्वङ्गः टुण्टुकः शल्लको रलुः ।
मयूरजङ्घो भल्लूकः प्रियजीवः कटम्भरः ॥ ५१ ॥
श्योनाको दीपनः पाकि कटुस्तुवरको हिमः ।
ग्राही तिक्तोऽनिलश्लेष्मपित्तकासविनाशनः ॥ ५२ ॥
टुण्टुकस्य फलं बालं रूक्षं वातकफापहम् ।
हृद्यं कषायमधुरं लघु रोचनदीपनम् ॥ ५३ ॥

अथ महत्पञ्चमूलनामगुणाः ।

बिल्वादिभिः पञ्चभिरेभिरेतत्स्यात्पञ्चमूलं महदग्निकारि ।
लघूष्णतिक्तं रसतः कषायं मेदःकफश्वासमीरहारि ॥ ५४ ॥

अथ गोक्षुरनामगुणाः ।

त्रिकण्टकः कण्टफलो गोक्षुरः स्वादुकण्टकः ।
गोकण्टको भक्षटकः त्रिकण्टो व्यालदंष्ट्रकः ॥ ५५ ॥
श्वदंष्ट्रा स्थूलशृङ्गाट पडङ्ग क्षुरकाभिधः ।
गोक्षुरः शीतलः स्वादुर्बलकृद् बस्तिशोधनः ।
प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातजित् ॥ ५६ ॥

अथ शालपर्णीनामगुणाः ।

शालपर्णी ध्रुवा सौम्या त्रिपर्णी पीवनी स्थिरा ।
विदारिगन्धातिगुहा दीर्घमूलांशुमत्यपि ॥ ५७ ॥
शालपर्णी गुरुः छर्दिज्वरश्वासातिसारनुत् ।
शोफदोषत्रयहरा वृष्यत्वग्या रसायनी ॥ ५८ ॥

अथ पृश्निपर्णीनामगुणाः।

पृश्निपर्णी क्रोष्टुपुच्छा धावनी कलसाह्वया।
शृगालवृन्ताङ्घ्रितिला पृथक्पर्णी च पर्णिका॥ ५९॥
पृश्निपर्णी लघुर्हृद्या मधुरोष्णा विनाशयेत्।
रक्तातिसारदाहच्छर्द्दोषत्रयवमिज्वरान्॥ ६०॥

अथ स्थूलभण्टाकीनामगुणाः।

बृहती स्थूलभण्टाकी विपदा च महोत्कटा।
भण्टाकी महती सिंही कण्टकी राष्ट्रकाकुली॥ ६१॥
बृहती ग्राहिणी हृद्या पाचनी कफवातजित्।
उष्णा कुष्ठज्वरश्वासशूलकासाग्निमान्द्यजित्॥ ६२॥

अथ कण्टकारीनामगुणाः।

कण्टकारिका कण्टकिनी कण्टकारी निदिग्धिका।
दुःस्पर्शा धावनी क्षुद्रा स्याद् व्याघ्री दुःप्रधर्षिणी॥ ६३॥
सिता क्षुद्रा चन्द्रहासा लक्ष्मणा क्षेत्रदूतिका।
कण्टकारी सरा तिक्ता कटुका दीपनी लघुः॥ ६४॥
रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान्।
निहन्ति पीनसं पार्श्वपीडाकृमिहृदामयान्।
तद्वत् प्रोक्ता सिता क्षुद्रा विशेषाद् गर्भकारिणी॥ ६५॥

अथ लघुपञ्चमूलनामगुणाः।

ह्रस्वाख्यं पञ्चमूलं स्यात् पञ्चभिर्गोक्षुरादिभिः।
बल्यं पित्तानिलहरं नात्युष्णं स्वादु बृंहणम्॥ ६६॥

अथ दशमूलनामगुणाः।

उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम्।
दोषत्रयश्वासकासशिरःपीडाप्रतिश्यान्।
तन्द्राशोथज्वरानाहपिपासारुचीर्हरेत्॥ ६७॥

अथ ऋद्धिवृद्धिनामगुणाः ।

ऋद्धिः सुखं युगं लक्ष्मीः सिद्धिः सर्वजनप्रिया ।
ऋषिसृष्टा रथाङ्गं स्याम्माङ्गल्यं श्रावणी वसू ॥
योग्यं युग्या तुष्टिराशिर्वृद्धिरप्येतदाह्वया ॥ ६८ ॥
ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरुः ।
वृद्धिर्गर्भप्रदा शीता हृष्या कासक्षयास्रनुत् ॥ ६९ ॥

अथ काकोलीक्षीरकाकोलीनामगुणाः ।

काकोली मधुरा वीरा कायस्था क्षीरशुक्लिका ।
ध्वांक्षोली वायसोली स्यात् स्वादुमांसी पयस्विनी ॥७०॥
द्वितीया क्षीरकाकोली सुराह्वा क्षीरिणी मता ।
पीवरी सहगस्कन्धः स क्षीरः स सुगन्धकः ।
क्षीरकाकोलिकाख्यात पित्तदोषज्वरापहः ॥ ७१ ॥
काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु ।
जयेत्समीरदाहास्रपित्तशोषक्षयाज्ज्वरान् ॥७२॥

अथ मेदामहामेदानामगुणाः ।

मेदा ज्ञेया शालपर्णी हृष्या मेदोद्भवा धरा ।
महामेदा मणिच्छिद्रा त्वदन्ता देवता मणिः ॥७३॥
मेदायुगं गुरु स्वादु हृष्यं स्तन्यकफापहम् ।
हृद्यं शीतलं रक्तपित्तक्षयसमीरनुत् ॥७४॥

अथ जीवकर्षभकनामगुणाः ।

जीवको मधुरः शृङ्गी ह्रस्वाङ्गः कूर्चशीर्षकः ।
ऋषभो वीर इन्द्राक्षी विषाणी दुर्धरो वृषः ॥७५॥
जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ ।
हरतः पित्तदाहास्रकासवातक्षयामयान् ॥७६॥

अथ अष्टवर्गनामगुणाः ।

अष्टवर्गोऽष्टभिर्द्रव्यैरेतैः शीतोऽतिशुक्रलः ।

रक्तैरण्डो हस्तिकर्णो व्याघ्रो व्याघ्रतरो लघु ।
उत्तानपत्र उरबु वातावैरी च चुञ्चुला ॥८७॥
एरण्ड युग्म मधुरसुष्ण गुरु विनाशयेत् ।
शूलशोथकटीवस्तिशिर पीडोदरज्वरान् ॥८८॥
ब्रध्नश्वासकफानाहकासकुष्ठाममारुतान् ।
तत्फलं भेदनं स्वादु चारमुष्णं समीरजित् ॥८९॥

अथ काष्ठसारिवाकृष्णसारिवानामगुणा ।

शारिवा शारदास्फोता गोपकन्या प्रतानिका ।
गोपाङ्गना गोपवल्ली लतास्ना काष्ठशारिवा ॥९०॥
शारिकन्या कृष्णमूली भद्रा चन्दनशारिवा ।
भद्रा चन्दनगोपा च चन्दना कृष्णवल्लयपि ॥९१॥
सारिवायुगलं स्वादु स्निग्धं शुक्रकरं गुरु ।
अग्निमान्द्यारुचिश्वासवमिकासत्रपापहम् ।
दोषत्रयास्रप्रदरज्वरातीसारनाशनम् ॥ ९२ ॥

अथ यवासधन्वयवासनामगुणा ।

यासो मरुद्भवोऽनन्तो दीर्घमूलो यवासक ।
बालपत्र समुद्रान्तो दूरमूलोऽतिकण्टक ॥९३॥
धन्वयासस्ताम्रमूलो दु स्पर्शा स्याद् दुरालभा ।
यासक कच्छुरा चाम्रमूलो धन्वयवासक ॥९४॥
यास स्वादुरसस्तिक्तो हिम पित्तहरो लघु ।
हन्ति रक्तकफभ्रान्तीस्तद्वद्धन्वयवासक ॥ ९५ ॥

अथ मुण्डीनामगुणा ।

मुण्डी भिक्षु परिव्राजी पावनी स्यात् तपोधना ।
श्रावणी श्रीमती मुण्डी तिक्ता श्रावणशीर्षका ॥९६॥
मुण्डी तिक्ता कटु पाके वीर्योष्णा मधुरा लघु ।
मेध्या गण्डापचीकृच्छ्रकृमियोन्यर्त्तिपाण्डुजित् ॥९७॥

### अथ महामुण्डीभूमिकदम्बनामगुणाः ।

महामुण्डी लोभनीया छिन्नग्रन्थीनिका स्मृता ।
भूतघ्नः कुलहलो लम्बुशालूकदम्बकः ।
कदम्बपुष्पमुण्डीवत् गुणैर्भूमिकदम्बकः ॥९८॥

### अथ अपामार्गनामगुणाः ।

अपामार्गस्तु शिखरी किणिही खरमञ्जरी ।
अधःशल्यः शैखरिकः प्रत्यक्पुष्पी मयूरका ॥ ९९ ॥
अपामार्गः सरस्तीक्ष्णो दीपनः कफवातजित् ।
निहन्ति दद्रुसिध्मार्शः कण्डूशूलोदरारुचीः ॥१००॥

### अथ रक्तापामार्गनामगुणाः ।

अन्यो रक्तो हस्तफलो वशिरः कपिपिप्पली ।
अपामार्गोऽरुणो वातविष्टम्भी कफनाशनः ।
ऊनं पूर्वगुणै रूक्षमाख्यं रक्तपित्तनुत् ॥१०१॥

### अथ काम्पिल्लनामगुणाः ।

काम्पिल्लो रेचनी रक्तचूर्णको रङ्गशोधनः ।
लोहितो रक्तशमनो रेचो रञ्जनको मतः ॥१०२॥
काम्पिल्लः कफपित्तास्रक्रिमिगुल्मोदरव्रणान् ।
हन्ति रेची कटुश्चोष्णः तत्पाकं पाचि शीतलम् ॥१०३॥

### अथ दन्तीनामगुणाः ।

दन्ती शुभ्रप्रिया नागदन्ती शीघ्रा मुकूलकः ।
उपचित्रानुकूली स्यादिन्द्रपर्णीदुम्बरच्छदा ॥१०४॥
पाण्डुपर्णी हयेरण्डा दन्त्यो भेदो मता ।
मूषकाख्या सुतश्रेणी चलाकुम्भी च कस्विका ॥१०५॥
दन्तीद्वयं सरं पाकरसयोः कटु दीपनम् ।
तीक्ष्णोष्णं हन्ति पित्तासृक्कफशोफोदरान् कृमीन् ॥१०६॥

अथ जयपालनामगुणाः ।

जयपालो दन्तीबीजं ख्यातं तत् तित्तिरीफलम् ।
जयपालो गुरुस्निग्धो रेचो पित्तकफापहः ॥१०७॥

अथ श्वेतत्रिवृन्नामगुणाः ।

त्रिवृत् कुम्भोऽरुणा त्रसभण्डी कूटरवाहिनी ।
सर्वानुभूतिस्त्रिवृता त्रिपुटा सरलासिता ॥१०८॥
त्रिवृत्तिक्ता सरा रूचा स्वादुरुष्णा समीरकृत् ।
कटुः पाके ज्वरश्लेष्मपित्तशोफोदरापहा ॥१०९॥

अथ कृष्णत्रिवृन्नामगुणाः ।

त्रिवृत्काला कालमेषी कालपर्ण्यर्द्धचन्द्रिका ।
सुखेनास्याम्मालिविका मसूरा विदलान्विता ॥११०॥
त्रिवृत्काला हीनगुणा तस्यास्तीव्रविरेचिनी ।
मूर्च्छादाहमदभ्रान्तिपान्तिकार्पणकारीणी ॥१११॥

अथ इन्द्रवारुणीद्वयनामगुणाः ।

इन्द्रवारुण्यथेन्द्राक्षं हयभाची गवादनी ।
ऐन्द्रवारुः क्षुद्रफला विषालेन्द्री हयादनी ॥११२॥
अन्येन्द्रवारुणी चित्रफला चित्रमहाफला ।
आत्मरक्षा नागदन्ती अपुषी गजचिर्भटी ॥११३॥,
श्वेतपुष्पी मृगाक्षी च तथा पञ्चसरा मता ।
मरुद्भवा कृमिगुहा चित्रदेवी च कीर्त्तिता ॥११४॥
ऐन्द्रवारुद्वय तिक्तं कटुपाकि सरं लघु ।
वीर्य्योष्णं कामलापित्तकफश्लीहोदरापहम् ॥११५॥

अथ आरग्वधनामगुणाः ।

आरग्वधो राजवृक्षः शम्याकः कृतमालकः ।
व्याधिघातः कर्णिकारः सम्पद्यतुरङ्गुलः ॥११६॥
आरोग्यशिम्बी स्वर्णाटः कर्णो दीर्घफलो मतः ।

कुण्डली हिमपुष्पा च कलिख्यातो नृपद्रुमः ॥११७॥
स्वर्णशेफालिका श्यावा कुष्ठसूदननाम तत्।
स्वर्णस्थाल्या पित्तला च सुवर्णद्रुम ईरितः ॥११८॥
आरग्वधो गुरुः स्वादुः शीतलो मृदुरेचनः।
ज्वरहृद्रोगपित्तास्रवातोदावर्त्तशूलजित् ॥ ११९ ॥
तत्पुष्पं वातलं ग्राहि तिक्तं पित्तकफापहम्।
तन्मज्जा मधुरः पाके तिक्तः पित्तसमीरजित् ॥ १२० ॥

अथ नीलिनीनामगुणाः।

नीलिनी नीलिका ग्राम्या श्रीफला भारवाहिनी।
रञ्जनी कलिकामेला तूणी रूक्षा विशोधिनी ॥ १२१ ॥
नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा।
उष्णा हन्त्युदरप्लीहवातपित्तकफानिलान् ॥ १२२ ॥

अथ कटुकीनामगुणाः।

कटुकी रोहिणी तिक्ता चक्राङ्गी कटुरोहिणी।
मत्स्यपित्ता पाण्डुरुहा कृष्णभेदा द्विजाङ्गिका।
अशोका रोहिणी मत्स्या सकुला सकुलादिनी ॥ १२३ ॥
कटुकी कटुपाके च तिक्ता रूक्षा सरा लघुः।
हिमा हन्ति क्रमिश्वासदाहपित्तकफज्वरान् ॥ १२४ ॥

अथ अङ्कोलकनामगुणाः।

अङ्कोलकस्ताम्रफलः पीतसारो निकोचकः।
गुमस्नेहो विरेची स्यात् भूपितो दीर्घकीलकः ॥ १२५ ॥
अङ्कोलकः कटुस्निग्धतीक्ष्णोष्णस्तुवरो लघुः।
रेचनः क्रमिशूलामशोफशैलविषापहः ॥ १२६ ॥
तत्फलं शीतलं स्वादु श्लेष्मलं बृंहणं गुरु।
बल्यं विरेचनं वातपित्तदाहक्षयास्रजित् ॥ १२७ ॥

अथ सेहुण्डनामगुणाः।

सेहुण्डो वज्रतुण्डस्तु गाण्डीरो वज्रकण्टकः।
स्नुहीोऽमच दुग्धोऽसिपत्रो वज्री महातरुः॥ १२८॥
सेहुण्डो रेचनस्तीक्ष्णो दीपनो कटुको गुरुः।
शूलामाष्ठीलिकाध्मानगुल्मशोफोदरानिलान्।
हन्ति दूषीविषप्लीहकुष्ठोन्मादाश्मपाण्डुताः॥ १२९॥

अथ निम्बनामगुणाः।

निम्बो नियमनो नेतारिष्टः स्यात्पारिभद्रकः।
सुतिक्तः सर्वतोभद्रः पिचुमन्दः प्रभद्रकः॥ १३०॥
कुष्ठहा देवदत्तश्च रविसन्निभसूर्य्यकः।
निम्बः शीतो लघुः ग्राही कटुपाकोऽग्निवातकृत्॥१३१॥
व्रणपित्तकफच्छर्दिकुष्ठहृल्लासमेहनुत्।
निम्बपत्रं स्मृतं नेत्र्यं क्रिमिपित्तविषप्रणुत्॥ १३२॥
तत्फलं भेदनं स्निग्धमुष्णं कुष्ठहरं लघु।
अपक्वं पाचयेन्निम्बः पक्वञ्चापरिशोषयेत्॥ १३३॥

अथ महानिम्बनामगुणाः।

महानिम्बो निम्बकरः कार्मुको विषमुष्टिकः।
रम्यको गिरिकोद्रेकाचारः स्यात् केशमुष्टिकः॥१३४॥
महानिम्बो हिमो रूक्षस्तिक्तो ग्राही कषायकः।
कफपित्तक्रिमिच्छर्दिकुष्ठहृल्लासरक्तजित्॥१३५॥

अथ किराततिक्तनामगुणाः।

किराततिक्तः कैरातो भूनिम्बो रामसेनकः।
किराकोऽन्यो नैपालो नाडितिक्तो ज्वरान्तकः।
काण्डतिक्तोऽर्द्धतिक्तः स्याच्चिद्रारिः सन्निपातहा॥१३६॥
किरातो वातलो रूक्षः शीतलस्तिक्तको लघुः।
सन्निपातज्वरश्वासकासपित्तास्रदाहनुत्॥१३७॥

अथ कुटजनामगुणाः।

कुटजो मल्लिकापुष्पः कलिङ्गो गिरिमल्लिका।
वत्सकः कुटजः कोटिवृक्षकः शक्रभूरुहः॥१३८॥
कुटजः कटुको रूक्षो दीपनस्तुवरो लघुः।
अर्शोऽतिसारपित्तास्रकफतृष्णामकुष्ठनुत्।
तत्पुष्पं वातलं शीतं तिक्तं पित्तातिसारजित्॥१३९॥

अथ इन्द्रयवनामगुणाः।

ऐन्द्रयवस्तस्य फलं कालिङ्गः कौटजो मतः।
शक्राह्वः पुरुहूतश्च भौमो भद्रयवस्तथा॥१४०॥
ऐन्द्रयवस्त्रिदोषघ्नः सग्राही शीतलः कटुः।
ज्वरातिसाररक्तार्शःकृमिवीसर्पकुष्ठनुत्॥१४१॥

अथ मदननामगुणाः।

मदनः छर्दनं पिण्डी राढपिण्डान्तकं फलम्।
वारहाटश्च तगरः शल्यको विषपुष्पकः॥१४१॥
मदनो वमनस्तिक्तो वीर्योष्णो लेखनो लघुः।
रूक्षः कुष्ठकफानाहशोफगुल्मव्रणापहः॥१४३॥

अथ कङ्कुष्ठनामगुणाः।

कङ्कुष्ठं कङ्काकुष्ठं रेचनं रङ्गनामकम्।
शोधनं पुलहं हासं वराङ्गं कुष्ठवालुकम्॥१४४॥
कङ्कुष्ठं रेचनं तिक्तं कटूष्णं वर्णकारकम्।
कृमिशोफोदराध्मानगुल्मानाहकफापहम्॥१४५॥

अथ हेमाह्वानामगुणाः।

हेमाह्वा कनकक्षीरी हेमपुष्पी हिमावती।
क्षीरिणी काञ्चनक्षीरी कटुपर्णी चिकर्षणी।
तिक्तदुग्धा हैमवती पीतदुग्धा हिमाद्रिका॥१४६॥

हेमाह्वा रेचनी तिक्ता मन्दाग्न्युत्क्लेदकारिणी ।
क्रिमिकण्डूकफानाहविषकुष्ठविनाशनी ॥१४७॥

अथ सातलानामगुणाः ।

सातला विरला सारी सत्फला बहुफेनका ।
चर्मसाह्वा चर्मकसा फेना दीप्ता च नालिका ॥१४८॥
सातला कटुका पाके वातला शीतला लघुः ।
तिक्ता शोथकफानाहपित्तोदावर्त्तरक्तजित् ॥१४९॥

अथ अश्मन्तकनामगुणाः ।

अश्मन्तो मालुकापत्रो युग्मपत्रोऽम्लपत्रकः ।
अश्वत्थगर्भयोनिः स्यात् कुशली पापनाशनः ॥१५०॥
अश्मन्तस्तुवरो ग्राही शीतोष्णः कफवातजित् ।
निहन्ति गण्डमालाश्मगलगण्डगलामयान् ।
तत्फलं लेखनं ग्राहि गुरुश्लेष्मानिलापहम् ॥१५१॥

अथ काञ्चनारनामगुणाः ।

काञ्चनारः काञ्चनकः पाकारी रक्तपुष्पकः ।
कोविदारोऽस्य भेदः स्यात् कुद्दालः कुड्ली कुली ।
आस्फोतो दालकः स्वल्पकेसरश्चमरी मता ॥१५२॥
काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् ।
क्रिमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः ॥१५३॥
कोविदारोऽपि तद्वत् स्यात् पुष्पं शीतं तयोर्लघुः ।
रूक्षं संग्राहि पित्तास्रप्रदरक्षतकासनुत् ॥१५४॥

अथ निर्गुण्डीद्वयनामगुणाः ।

निर्गुण्डी श्वेतकुसुमः सिन्दुकः सिन्दुवारकः ।
भूतकेश्यपरो नीलसिन्दुकः पुष्पनीलकः ॥१५५॥
शेफालिका शीतभीरुर्वनकोऽनिलमञ्जरी ।
निर्गुण्डी स्मृतिदा तिक्ता कषाया कटुका लघुः ॥१५६॥

केश्या नेत्रहिता हन्ति शूलशोथाममारुतान् ।
क्रिमिकुष्ठरुचिः श्लेष्मव्रणान्नीलापि तद्विधा ॥१५७॥

अथ मेषशृङ्गीनामगुणाः ।

मेषशृङ्गी मेषवल्ली सर्पदंष्ट्राजशृङ्गिका ।
अन्या तु दक्षिणावर्त्ती वृश्चिकाली विषाणिका ॥१५८॥
मेषशृङ्गी रसे तिक्ता वातला श्वासनाशनी ।
रूक्षा पाके कटुः पित्तव्रणश्लेष्माक्षिशूलनुत् ॥१५९॥

अथ पुनर्नवाद्वयनामगुणाः ।

पुनर्नवा श्वेतमूला पृथ्वीको दीर्घपत्रकः ।
विषादधीवर्षाभूः पुनर्भूर्मण्डलच्छदा ॥१६०॥
पुनर्नवा सरा तिक्ता रूक्षोष्णा मधुरा कटुः ।
पुनर्नवारुणा तिक्ता रक्तपुष्पा कठिल्लका ॥१६१॥
क्रूरकः क्षुद्रवर्षाभूर्वर्षकेतुः शिवाटिका ।
शोफानिलव्रणश्लेष्महरा रुच्या रसायनी ॥१६२॥
पुनर्नवा वरा तिक्ता कटुपाका हिमा लघुः ।
वातला ग्राहिणी श्लेष्मरक्तपित्तविनाशनी ॥१६३॥

अथ रास्नानामगुणाः ।

रास्ना रम्या युक्तरसा रसना गन्धनाकुली ।
सुगन्धमूलातिरसा श्रेयसी सुवहा रसा ॥१६४॥
रास्नामपाचनी तिक्ता गुरूष्णा श्लेष्मवातजित् ।
शोफश्वासमीरासवातशूलोदरापहा ॥१६५॥

अथ अश्वगन्धानामगुणाः ।

अश्वगन्धा तुरङ्गाह्वा गोकर्णीवाजिपुष्पकः ।
वराहकर्णी वरदा बल्या वाजीकरी वृषा ॥१६६॥
अश्वगन्धानिलश्लेष्मशोफश्वित्रक्षयापहा ।
बल्या रसायनी तिक्ता कषायोष्णातिशुक्रला ॥१६७॥

अथ प्रसारणीनामगुणाः ।

प्रसारणी राजबला चारुपर्णी प्रतानिका ।
सरणी सारणी भद्रपर्णी सुप्रसरा सरा ॥१६८॥
प्रसारणी गुरुर्वृष्या सन्धानबलकृत् सरा ।
वीर्योष्णा वातनुत् तिक्ता वातरक्तकफापहा ॥१६९॥

अथ शतावरीनामगुणाः ।

शतावरी द्वीपिशत्रुर्द्वीपिकाधरकण्टका ।
नारायणी शतपदी शतपाद् बहुपत्रिका ॥१७०॥
शतावरी गुरुः शीता स्वादुः स्निग्धा रसायनी ।
शुक्रस्तन्यकरी बल्या वातपित्तास्रशोफजित् ॥१७१॥

अथ महाशतावरीनामगुणाः ।

शतावर्य्यूर्द्ध्वकण्टाख्या पीवरी धीवरी वरी
अभीरुर्बहुपत्रा च महापुरुषदन्तिका ।
सहस्रवीर्य्या केशी स्यात् तुङ्गिनी सूक्ष्मपत्रिका ॥१७२॥
महाशतावरी मेध्या हृद्या वृष्या रसायनी ।
शीतवीर्य्या निहन्त्यर्शोग्रहणीनयनामयान् ।
तदङ्कुरस्त्रिदोषघ्नो लघुरर्शः क्षयापहः ॥१७३॥

अथ बलानामगुणाः ।

बला वाट्यालकः शीतपाकी वाट्योदराह्वया ।
भद्रौदनी समङ्गा स्यात् समांसा खरयष्टिका ॥१७४॥

अथ सहदेवीनामगुणाः ।

महाबला पीतपुष्पी सहदेवी हृहन्ना ।
वाट्यायनी देवसहा वाट्या स्यात् पीतपुष्पिका ॥ १७५ ॥

अथ बलाकानामगुणाः ।

बलाकातिबला भारद्वाजी स्याद् वृषगन्धिनी ॥ १७६ ॥

अथ गङ्गेरुकीनामगुणाः।

गङ्गेरुकी नागबला विश्वदेवा गवेधुका ॥ १७७ ॥

अथ बलाचतुष्टयगुणाः।

बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत्।
स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम् ॥ १७८ ॥
श्वासो हृद्बला कृच्छ्रं हन्ति वातानुलोमनी।
गुर्वी नागबला तृष्या विशेषाद्रक्तपित्तजित्।
बल्या रसायनी पुंस्त्ववर्द्धिनी बृंहणी तथा ॥ १७९ ॥
तस्याः फलं हिमं स्वादु स्तम्भनं गुरुलेखनम्।
विष्टम्भाध्मानजननं रक्तपित्तविवर्द्धनम् ॥ १८० ॥

अथ ज्योतिष्मतीनामगुणाः।

ज्योतिष्मती वह्निरुचि कङ्गुणी कटभी तथा ॥ १८१ ॥
ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित्।
अत्युष्णा वामनी तीक्ष्णा वह्निबुद्धिस्मृतिप्रदा ॥ १८२ ॥

अथ महाज्योतिष्मतीनामगुणाः।

तेजस्विनी तेजोवती तेजिन्या लघुवल्कला।
महौजसी पारिजाता शीता तिक्तातितेजिनी ॥ १८३ ॥
तेजस्विनी कफश्वासकासशूलामवातजित्।
पाचन्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीपनी ॥ १८४ ॥

अथ देवदारुनामगुणाः।

देवदारु सुराह्वं स्यादिन्द्रदारु सुरद्रुमः।
भद्रकाष्ठं स्नेहवृक्षः कृमिलं शक्रदारु च ॥ १८५ ॥
देवदारु कटु स्निग्धं तिक्तोष्णं लघु नाशयेत्।
आध्मानज्वरशोथामहिक्काकण्डुकफानिलान् ॥ १८६ ॥

अथ सरलनामगुणाः।

सरलो नन्दनो शीडा नमेरुहिकहृच्चका।

पीतदारु पीतद्रुश्चो महादीर्घकलिद्रुमा ॥ १८७ ॥
सरल कटुकः पाकरसयोर्मधुरो लघुः ।
उष्णा स्निग्धा समीरास्रिकण्ठकर्णासयापहा ॥ १८८ ॥

अथ पुष्करमूलनामगुणाः ।

पौष्कराह्वं पद्मपत्रं पौष्करं पुष्कराह्वयम् ।
काश्मीरं पुष्करजटा मूलवीरं सुगन्धिकम् ॥ १८९ ॥
पौष्करं कटुकं तिक्तमुष्णवातकफज्वरान् ।
हन्ति शोफारुचिश्वासान् विशेषात् पार्श्वशूलजित् ॥१९०॥

अथ कुष्ठनामगुणाः ।

कुष्ठं रोगाह्वयं दिव्यं कौवेरं पारिभद्रकम् ।
पारिव्याध्यं पारिभाव्यमुत्पलं पारिभव्यकम् ॥ १९१ ॥
कुष्ठमुष्णं कटु स्वादु तिक्तं शुक्रप्रदं लघु ।
हन्ति वातास्रवीसर्पकुष्ठकासमरुत्कफान् ॥ १९२ ॥

अथ कर्कटशृङ्गीनामगुणाः ।

शृङ्गी कुलीरशृङ्गी स्याद्वक्रा कर्कटशृङ्गिका ।
कर्कटाख्या महाघोषा शृङ्गनाम्नी नतान्यपि ॥ १९३ ॥
शृङ्गी कषायतिक्तोष्णा हन्ति हिक्कावमिज्वरान् ।
तृष्णा वमिकफश्वासक्षयकासोर्ध्वमारुतान् ॥ १९४ ॥

अथ कट्फलनामगुणाः ।

कट्फलं कुमुदा कुम्भी श्रीपर्णी सोमपादपः ।
सोमवल्को महाकुम्भी भद्रा भद्रवती शिवा ॥ १९५ ॥
कट्फलं तुवरं तिक्तं कटुवातकफज्वरान् ।
हन्ति श्वासप्रमेहार्शः कासकण्ठामयारुची ॥ १९६ ॥

अथ रोहिषनामगुणाः ।

रोहिषं कत्तृणं भूतिभूतिकं सरलं तृणम् ।
श्यामकं सुगमकं पौरं ध्यामकं देवगन्धकम् ॥ १९७ ॥

रोहिषं कटुकं पाके तिक्तोष्णं तुवरं जयेत्।
हन्ति मारुतपित्तास्रं त्वगामयकासकफज्वरान्॥ १९८॥

अथ भार्गीनामगुणाः।

भार्गी भृगुभवा पद्मा कासघ्नी गन्धपर्वणी।
खरशाकं शुक्रमाता फञ्जी ब्राह्मणयष्टिका॥ १९९॥
भार्गी रूक्षो कटुस्तिक्ता रुच्योष्णा पाचनी जयेत्।
शोथकासकफश्वासपीनसज्वरमारुतान्॥ २००॥

अथ पाषाणभेदनामगुणाः।

पाषाणभेदः पाषाणोऽश्मरीभेदोऽश्मभेदकः।
शिलाभेदो दृषद्भेदो नागभिन्नाङ्गभेदनः॥ २०१॥
पाषाणभेदस्तुवरः शीतलो बस्तिशोधनः।
सतिक्तः प्रमेहार्शःकृच्छ्राश्मरीरुजो जयेत्॥ २०२॥

अथ मुस्तानामगुणाः।

मुस्तं वारिधरो मुस्तो मेघाख्यः कुरुविन्दकः॥ २०३॥
वराहोऽब्दो घनो भद्रमुस्तं राजकसेरुकः।
पिण्डमुस्तं विषध्वंसी नागरोऽन्यः प्रकीर्त्तितः॥ २०४॥
मुस्तं कटु हिमग्राहि तिक्तं दीपनपाचनम्।
कषायं कृमिपित्तासृक्कफतृष्णाज्वरापहम्॥ २०५॥

अथ धातकीनामगुणाः।

धातकी कुञ्जरा सिन्धुपुष्पी प्रमदिनी मदा।
पार्वतीया ताम्रपुष्पी सुभिक्षा मद्यवासिनी॥ २०६॥
धातकी कटुका शीता मन्दोष्णा तुवरा लघुः।
तृष्णातीसारपित्तास्रविषकृमिविसर्पजित्॥ २०७॥

अथ माचिकानामगुणाः।

माचिका मालिकाम्बष्ठा शठी दन्तशठाम्बिका।
अम्बष्ठकी सूचीमुखी कषाया कण्ठमुख्यपि॥ २०८॥

माक्षिकाम्ला रसे पाके कषायो शीतलो लघुः।
पक्वातीसारपित्तास्रकफकण्ठामयापहा ॥ २०९ ॥

अथ विदारिकन्दद्वयनामगुणाः।

विदारिका स्वयंवल्ली स्वयकन्दा विदालिका।
शृगालिका कन्दवल्ली स्वादुकन्दा विडालिका ॥२१०॥
अन्या शुक्ला क्षीरशुक्ला क्षारवल्ली पयस्विनी।
इक्षुवल्ली महाश्वेता क्षीरकन्देक्षुगन्धिका ॥ २११ ॥
विदारी मधुरा स्निग्धा बृंहणी स्तन्यशुक्रदा।
गुरुःपित्तास्रपवनदाहान् हन्ति रसायनी ॥ २१२ ॥

अथ वाराहीकन्दनामगुणाः।

वाराही माधवी गृष्टि शौकरी वनमालिका।
विश्वक्सेनप्रिया क्रोडनाम्ना शम्बरकन्दकः ॥ २१३ ॥
वाराही मधुरा कन्दे कटुस्तिक्तातिशुक्रला।
वन्या शुक्रकरा वातकफमेहक्रमीन् जयेत् ॥ २१४ ॥

अथ पाठानामगुणाः।

पाठाम्बष्ठा वृहत्तिक्ता प्राचीनाम्बष्ठिका रसा।
वरा तिक्ता पापचेली श्रेयसी वृद्धकर्णिका ॥ २१५ ॥
पाठोष्णाकटुका तीक्ष्णा वातघ्ना श्रहरा लघुः।
हन्ति शूलज्वरच्छर्दिकुष्ठातीसारहृद्रुजः।
दाहकण्डुविषश्वासकृमिगुल्मगरव्रणान् ॥ २१६ ॥

अथ मोरटीनामगुणाः।

मूर्वादेवी मधुरसा देवश्रेणी मधुस्रवा।
स्निग्धपर्णी पृथक्पर्णी मोरटी पीलुपर्णिका ॥ २१७ ॥

अथ मञ्जिष्ठानामगुणाः।

मञ्जिष्ठा विजया रक्ता रक्ताङ्गी कालमेषिका।
रक्तयष्टी ताम्रवल्ली समङ्गा वस्त्रभूषणा ॥ २१८ ॥

मञ्जिष्ठा विकसा भण्डी छत्रिका ज्वरनाशिनी।
मञ्जिष्ठा मधुरा तिक्ता कषाया स्वरवर्णकृत् ॥ २१९ ॥
गुरुरुष्णा विषश्लेषशोफयोन्यक्षिशूलनुत्।
रक्तातीसारकुष्ठास्रवीसर्पव्रणमेहजित्।
तच्छाकं दीपनं स्वादु स्निग्धं पित्तानिलापहम् ॥ २२० ॥

अथ हरिद्रानामगुणा।

हरिद्रा रजनी गौरी रञ्जिनी वरवर्णिनी।
पिण्डा पीता वर्णवती निशावर्णा विलासिनी ॥ २२१ ॥
हरिद्रा कटुका तिक्ता रूक्षोष्णा श्लेष्मपित्तनुत्।
वर्ण्या त्वग्दाहमेहास्रशोफपाण्डुव्रणापहा ॥ २२२ ॥

अथ दारुहरिद्रापीतदारुनामगुणा।

दार्वी दारुहरिद्राऽन्या पीतदारु च पञ्चधा।
कटं कटेरी पित्तद्रु. स्वर्णवर्णा कटङ्कटी ॥ २२३ ॥
दार्वी तद्वद्विशेषात्तु नेत्रकर्णास्यरोगनुत् ॥ २२४ ॥

अथ प्रपुन्नाटनामगुणाः।

प्रपुन्नाटस्त्वेडगजश्चक्रमर्द प्रपुन्नड:।
दद्रुघ्नो मर्दको मेषकुसुम कुष्ठकृन्तन ॥ २२५ ॥
प्रपुन्नाटो लघु स्वादु रूक्ष पित्तानिलापह।
हृद्यो हिमकफश्वासकुष्ठदद्रुकृमीन् जयेत् ॥ २२६ ॥
उष्णं तत्फलं कुष्ठकण्डूदद्रुविषानिलान्।
वातरक्तापहं तस्या शाकं कफकर लघु ॥ २२७ ॥

अथ वाकुचीनामगुणा।

वाकुची चन्द्रिका सोमवल्ली पूतिफला वरा।
सोमराजी कृष्णफला चलगुजा कालमेषिका।
चन्द्रलेखा तथा सोम. कुष्ठघ्नो च सितावरी ॥ २२८ ॥
वाकुची मधुरा तिक्ता कटुपाका रसायनी।

विष्टम्भघ्नी हिमा रुच्या सरा छर्द्यास्रपित्तनुत् ॥ २२९ ॥
रूचा हन्तिकफ श्वासकुष्ठमेहज्वरक्रमीन् ।
तत्फलं पित्तहृत् केश्यं कुष्ठवातकफापहम् ॥ २३० ॥

अथ भृङ्गराजनामगुणाः ।

भृङ्गराजो भेकराजो मार्कवः केशरञ्जकः ।
भङ्गारको भृङ्गराजो भृङ्गाह्वः सूर्यवल्लभः ॥ २३१ ॥
भृङ्गराजः कटुस्तिक्तो रुक्षोष्णः कफवातहृत् ।
दन्त्यो रसायनस्त्वच्य· कुष्ठनेत्रशिरोऽर्त्तिजित् ॥ २३२ ॥

अथ पर्पटनामगुणाः ।

पर्पटः कवचो रेणु· पित्तघ्ना वरकण्टकः ।
वरतिक्तः पर्पटकः पुष्पिकश्चर्मकण्टकः ॥ २३३ ॥
पर्पटो हन्ति पित्तासृग्भ्रमतृष्णाकफज्वरान् ।
संग्राही शीतलस्तिक्तो दाहनुत् वातलो लघुः ॥२३४॥
रक्तपुष्पोऽतिसारस्य वारको ज्वरनाशनः ।
पर्पट पित्तहृद्दाहज्वरजित् श्लेष्मशोषणः ।
तिक्तशीतौ ज्वरहरौ लघू भूनिम्बपर्पटौ ॥ २३५ ॥

अथ त्रायमाणानामगुणाः ।

शणपुष्पी माल्यपुष्पी धावनी शणघण्टिका ।
छ्हत्पुष्पी स्वल्पघण्टा घण्टामध्दा तु पुष्पिका ॥ २३६ ॥
शणपुष्पी कटु· पित्तश्लेष्मजिच्छर्दिकारिणी ।
त्रायमाणा सुहृद्याया त्रायन्ती गिरिजानुजा ।
बलभद्रा कृतत्राणा वार्षिकं त्रायमाणिका ॥ २३७ ॥
त्रायमाणा सरा पित्तज्वरश्लेष्मासृगशूलजित् ॥ २३८ ॥

अथ महाजालनिकानामगुणाः ।

महाजालनिका घर्मरङ्गः स्यात् तिलपुष्पिका ।
पायत्तंपी सिन्दुपिनी विभाण्डी रक्तपुष्पिका ॥ २३९ ॥

महाजालिनिका तिक्ता रेचनी कफपित्तजित् ।
हन्ति दाहोदरानाहशोफकुष्ठकृमिज्वरान् ॥२४०॥

अथ अतिविषाभेदनामगुणाः ।

अतिविषा शुक्लकन्दा विषा प्रतिविषापरा ।
श्यामकन्दा शिवाशृङ्गी भङ्गुरोपविषाणिका ॥२४१॥
विषोष्णा पाचनी तिक्ता श्लेष्मपित्तातिसारजित् ॥२४२॥
श्यामकन्दा चोपविषा सा विज्ञेया चतुर्विधा ।
रक्ता श्वेता भृश कृष्णा पीतवर्णा तथैव च ॥२४३॥
यथापूर्वंवद्विज्ञेया बल्या श्रेष्ठा गुणोत्तमा ।
सर्वदोषहराऽप्रत्वाल्लेपात् श्वयथुनाशिनी ।
श्लेष्मजान् विंशतिरोगान् सद्यो हन्याद्रसायनी ॥२४४॥

अथ काकमाचीनामगुणाः ।

काकमाची ध्वाङ्क्षमाची वायसी च घनाघना ।
रसायनवरा सर्वतिक्ता स्यात् काकिनी कटुः ॥२४५॥
काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा ।
हृद्या रसायनी शोफकुष्ठार्शोज्वरमेहजित् ॥२४६॥

अथ काकजङ्घानामगुणाः ।

काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा ।
पारावतपदी काका मदाम्या छर्दिकारिणी ॥२४७॥
काकजङ्घा हिमा हन्ति रक्तपित्तकफज्वरान् ॥२४८॥

अथ लोध्रद्वयनामगुणाः ।

लोध्रस्तिरीट कानीनस्तिलक मत्तलोद्भव ।
अन्यो घनत्वात् मरक श्वेतलोध्रोऽक्षिभेषजम् ॥२४९॥
लोध्रो विरेचक शीतश्चक्षुष्य कफपित्तनुत् ।
कषायो रक्तशोफास्रग्ज्वरातीसारनाशन ।
तत्पुष्पं मधुरं ग्राहि सतिक्तं श्लेष्मपित्तजित् ॥२५०॥

अथ वृद्धदारुकनामगुणाः ।

वृद्धदारुर्महाश्यामा लाङ्गली जीर्णवल्कलः ।
अन्या कोटरपुष्पी स्यादावेगी छागलान्त्रिका ॥२५१॥
वृद्धदारुः कषायोष्णः सरस्तिक्तो रसायनः ।
हृष्यो वातामवातास्रशोफमेहकफान् जयेत् ॥२५२॥

अथ देवदालीनामगुणाः ।

देवदाली वृत्तकोशी देवताडी गरागरी ।
जीमूतस्तारका वेणी जालिन्याऽखुविषापहा ॥२५३॥
देवदाली रसे तिक्ता कफार्शःशोफपाण्डुताः ।
नाशयेद् वामनी तीक्ष्णा क्षयहिक्काक्रमिज्वरान् ।
देवदाली च कटुका प्रमेहकामलापहा ॥२५४॥

अथ हंसपादीनामगुणाः ।

हंसपादी हंसपदी रक्तपादी त्रिपादिका ।
प्रह्लादिनी कीटमारी कीटमाता मधुस्रवा ॥२५५॥
हंसपादी गुरुः शीता हन्ति रक्तविषव्रणान् ।
विसर्पदाहातीसारलूताभूताग्निरोहिणीः ॥२५६॥

अथ सोमवल्लीनामगुणाः ।

सोमवल्ली यज्ञनेता सोमक्षीरी द्विजप्रिया ॥२५७॥
सोमवल्ली त्रिदोषघ्नी कटुस्तिक्ता रसायनी ॥२५८॥

अथ आकाशवल्लीनामगुणाः ।

आकाशवल्ली तु बुधैः कथितामरवल्लरी ॥२५९॥
खवल्ली ग्राहिणी तिक्ता पिच्छिलाक्ष्यामयापहा ॥२६०॥

अथ नाकुलीनामगुणाः ।

नाकुली सुरसानर्पगन्धिनी गन्धनाकुली ।
नकुलेष्टा महासर्पनेत्रा रोचकपत्रिका ॥२६१॥
नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् ।

विषं लूतावृश्चिकाखुसर्पाणाञ्च क्रिमिव्रणान् ॥२६२॥

अथ वटपत्रीनामगुणाः ।

वटपत्री मोहिनी स्यादीपनी रेचनी मता ।
वटपत्री योनिगदान् कषायोष्णा विनाशयेत् ॥२६३॥
तत्फलं स्तम्भनं शीतं वातलं कफपित्तजित् ॥२६४॥

अथ लज्जालुनामगुणाः ।

लज्जालुर्मोहिनी स्पृक्का खदिरो गन्धकारिणी ।
नमस्कारो शमीपत्री समङ्गा रक्तपादिका ॥२६५॥
लज्जालुः शीतला तिक्ता कषाया श्लेष्मपित्तजित् ।
रक्तपित्तमतीसारं योनिरोगान् विनाशयेत् ॥२६६॥

अथ मुषलीनामगुणाः ।

मुषली खलिनी तालपत्री काञ्चनपुष्पिका ।
महावृष्या वृष्यकन्दः खर्जूरी तालमूलिका ॥२६७॥
मुषली मधुरा वृष्या वीर्य्योष्णा वृंहणी गुरुः ।
तिक्ता रसायनी हन्ति गुदजाननिलांस्तथा ॥२६८॥

अथ कपिकच्छूनामगुणाः ।

कपिकच्छुः स्वयंगुप्ता कण्डूला दुरवग्रहा ।
चण्डात्मगुप्ता लाङ्गूली मर्कटी स्यात् प्रहर्षणी ॥२६९॥
कपिकच्छुः परं वृष्या मधुरा वृंहणी गुरुः ।
तद्बीजं वातशमनं वाजीकरणमुत्तमम् ॥२७०॥

अथ पुत्रजीवनामगुणाः ।

पुत्रजीवो गर्भकरो यष्टीपुत्रोऽर्थसाधनः ।
पुत्रजीवो गुरुर्वृष्यो गर्भदः श्लेष्मवातजित् ॥२७१॥

अथ वन्ध्याकर्कोटकीनामगुणाः ।

वन्ध्याकर्कोटकी देवी कुमारी विषकण्टिनी ।
मनोज्ञा नागदमनी वन्ध्या योगीश्वरी मता ॥२७२॥

बन्ध्याकर्कोटकी लघ्वी कफनुद् व्रणशोधनी।
सर्पदंष्ट्रहरा तीक्ष्णा विसर्पविषनाशिनी ॥२७३॥

अथ विष्णुक्रान्तानामगुणाः।

विष्णुक्रान्ता नीलपुष्पी जया वश्यापराजिता ॥२७४॥
विष्णुक्रान्ता कटुर्मेध्या क्रिमिव्रणकफान् क्षयेत् ॥२७५॥

अथ शङ्खपुष्पीनामगुणाः।

शङ्खपुष्पी शङ्खनाम्नी किरीटी कम्बुमालिनी ॥२७६॥
शङ्खपुष्पी सरा मेध्या हृष्या मानसरोगहृत्।
रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा।
दोषापस्मारभूतालक्कुष्ठक्रिमिविषप्रणुत् ॥२७७॥

अथ दुग्धिकानामगुणाः।

दुग्धिका मधुपर्णी स्यात् क्षीरिणी स्वादुपुष्पिका ॥२७८॥
दुग्धिकोष्णा गुरू रूक्षा वातला गर्भकारिणी।
स्वादुर्विष्टम्भिनी हृष्या कफकुष्ठकृमीन् जयेत् ॥२७९॥

अथ अर्कपुष्पीनामगुणाः।

अर्कपुष्पी क्रूरकर्मा जलकामा भिरिण्टिका ॥२८०॥
अर्कपुष्पी क्रिमिश्लेष्ममेहपित्तविकारजित् ॥२८१॥

अथ भल्लातकनामगुणाः।

भल्लातको नभोवल्ली वीरवृक्षोऽग्निवक्त्रकः।
आरुष्करस्तथा रूक्षस्तपनोऽग्निमुखो धनुः ॥२८२॥
भल्लातकः कषायोष्णः शुक्रलो मधुरो लघुः।
वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान्।
हन्ति गुल्मज्वरश्वित्रवह्निमान्द्यक्रिमिव्रणान् ॥२८३॥

अथ चरपोटानामगुणाः।

चरपोटा दीर्घपर्णी कुन्तली तिलका मता ॥२८४॥
चरपोटा हिमा रूक्षा भेदिनी श्वासकासजित् ॥२८५॥

अथ द्रोणपुष्पीनामगुणाः।

द्रोणपुष्पी श्वसनकः पालिन्दी कुम्भयोनिका।
छत्राणी छत्रको द्रोणा कौण्डिन्यो दृढसारकः ॥२८६॥
द्रोणपुष्पी गुरू रूक्षा स्वादूष्णा वातपित्तनुत्।
भेदिनी कामलाशोफकफक्रिमिहरा कटुः ॥२८७॥

अथ ब्राह्मीब्राह्ममण्डूकीनामगुणाः।

ब्राह्मी सरस्वती सोमा सत्याह्वा ब्रह्मचारिणी।
मण्डूकपर्णी माण्डूकी त्वष्ट्री दिव्या महौषधी।
कपोतवेगा सुनिका लावण्या सोमवल्लरी ॥२८८॥
ब्राह्मी हिमा सरा स्वादुर्लघुर्मेध्या रसायनी।
स्वर्य्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रकासजित्।
विषशोफज्वरहरा तद्वत् मण्डूकपर्णिनी ॥२८९॥

अथ सुवर्चलाब्रह्मसुवर्चलानामगुणाः।

सुवर्चलाऽर्ककान्ता स्यात् सूर्य्यभक्ता सुखोद्भवा।
सूर्य्यावर्त्ता रविप्रीता त्वन्या ब्रह्मसुवर्चला ॥२९०॥
सुवर्चला गुरु शीता मूत्रला कफवातजित्।
अन्योष्णा कुष्ठमेहाश्मकृच्छ्रज्वरहरा लघुः ॥२९१॥

अथ मत्स्याक्षीनामगुणाः।

मत्स्याक्षी वाह्लिका मत्स्यगन्धी मत्स्यादनी तथा।
मत्स्याक्षी ग्राहिणी शीता कुष्ठपित्तकफास्रनुत् ॥२९२॥

अथ जलपिप्पलीनामगुणाः।

जलपिप्पल्यम्बुवल्ली पल्लूरं कच्छटस्तथा ॥२९३॥
जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः।
संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा ॥२९४॥

अथ गोजिह्वानामगुणाः।

गोजिह्वा गोजिका गोभी दार्विका खरपर्णिनी ॥२९५॥

गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् ।
हृद्या प्रमेहकासास्रव्रणज्वरहरा लघुः ॥२९६॥

अथ नागदमनीनामगुणाः ।

नागाह्वादमनी नागगन्धा भुजगपर्णिनी ॥२९७॥
स्यान्नागदमनी वर्ण्या लूतासर्पविषापहा ॥२९८॥

अथ गुञ्जाद्वयनामगुणाः ।

गुञ्जा शिखण्डिनी ताम्रा रक्तिका काकनासिका ।
श्वेतान्या चक्रिका चूडा दुर्मुखा काकपीलुका ॥२९९॥
गुञ्जा केश्या बलकरा त्वच्या पित्तकफापहा ।
नेत्रामयहरा हृष्या हन्ति कण्डूग्रहव्रणान् ।
क्रिमीन् प्रलुप्तकुष्ठानि तद्वच्छ्वेतापि शस्यते ॥३००॥

अथ वेल्लन्तरनामगुणाः ।

वेल्लन्तरो दीर्घपत्रो वीरद्रुर्बहुवारकः ॥३०१॥
वेलन्तरोऽश्मनुद् ग्राही कफमूत्रक्षानिलार्त्तिजित् ॥३०२॥

अथ वन्दाकनामगुणाः ।

वन्दाकः स्याद्वृक्षरुहा शेखरी कामवृक्षकः ।
वृक्षादनी कामतरुः कामिनी पदरोहिणी ॥३०३॥
वन्दाकः कफवातास्रशोफव्रणविषापहः ॥३०४॥

अथ पिण्डारनामगुणाः ।

पिण्डारः करहाटः स्यात् तीक्ष्णकोलः कुरङ्गकः ॥३०५॥
पिण्डारो मधुरः शीतः शोथपित्तकफापहः ॥३०६॥

अथ छिक्किकानामगुणाः ।

छिक्किका क्षवकः क्रूरो नासासंवेदना पटुः ॥३०७॥
छिक्किका पित्तला कुष्ठक्रिमिवातकफापहा ॥३०८॥

अथ रोहितनामगुणाः ।

रोहितो दाडिमीपुष्पो रोहितः कूटशाल्मलिः ।

प्लीहारी रोहिणी रोही रक्ताम्र. पारिजातक. ॥२०९॥
रोहितक सरो गुल्मयकृत्प्लीहोदरापह. ॥२१०॥

अथ मोचरसनामगुणा ।

मोचक' स्यान्मोचरस. शाल्मलीवेष्टक: स्मृत. ।
मोचनिर्यासक: पिच्छा मोचास्रावो च वेष्टक ॥२११॥
मोचक शीतलो ग्राही गुरुष्योऽतिसारजित् ।
प्रवाहकासपित्तास्रकफदाहनिवर्हण. ॥२१२॥

अथ अजगन्धानामगुणा ।

अजगन्धा बस्तगन्धा कवरी पूतवर्वर: ॥२१३॥
अजगन्धा लघू रुच्या हृद्या तु कफवातनुत् ॥२१४॥

अथ सौरेयकनामगुणा. ।

सौरेयक सहचर' सैरेय किङ्किरातक ।
दासी सहचर: झिण्टी शैर्पको मृदुकण्टक ॥२१५॥
रक्तपुष्प कुरुवक. पीतो ज्ञेय कुरण्टक: ।
नील आर्त्तगल शोक्तो बाण चोदनपाव्यपि ॥२१६॥
सौरेय कुष्ठवातास्रकफकण्डूविषापह ।
तिक्तोष्णो मधुरोऽनम्ल सुस्निग्ध केशरञ्जन ॥२१७॥

अथ नीलश्वेतस्यन्दादयनामगुणा ।

श्वेतस्यन्दा श्वेतपुष्पा कटभिर्गिरिकर्णिका ।
सितापराजिता श्वेता विषघ्नी मेहनाशिनी ।
नीलस्यन्दा व्यक्तगन्धा नीलपुष्पा गवादनी ॥२१८॥
श्वेतस्यन्दाद्वयं शीत चक्षुष्य दृष्टिकुष्ठनुत् ।
कुष्ठशूलत्रिदोषामशोफव्रणविषापहम् ॥२१९॥

अथ इक्षुरनामगुणा ।

इक्षुर' इक्षुगन्धक: कोकिलाक्ष इक्षुर स्मृत ।
तैलकण्टकस्तिक्तद्विर्वालिका चेक्षुगन्धिका. ॥२२०॥

दर्दुरः शीतलो हृद्यो गुरुर्वातकफास्रजित् ॥२२१॥

अथ कार्पासनामगुणाः ।

कार्पासः पटशूलश्चादवनोवादरः पिचुः ॥२२२॥
कर्पासको लघुः कोष्णो मधुरो वातनाशनः ।
तद्बीजं स्तन्यदं हृद्यं स्निग्धं कफहरं गुरु ॥२२३॥

अथ आरामशीतलानामगुणाः ।

आरामशीतला देवी गन्धा कुक्कुरमर्दनः ॥२२४॥
आरामशीतला शीता कटुः पित्तकफास्रजित् ॥२२५॥

अथ कुक्कुरद्रुनामगुणाः ।

कुक्कुरद्रुस्ताम्रचूडः सूक्ष्मपत्रो मृदुच्छदः ॥२२६॥
कुक्कुरद्रुः कटुस्तिक्तो ज्वररक्तकफापहः ॥२२७॥

अथ ब्राह्मीनामगुणाः ।

ब्राह्मी शङ्खधरा वारि ब्राह्मी च छिलमोचिकः ॥२२८॥
ब्राह्मी शोफहरा कुष्ठपित्तश्लेष्मानिलापहा ॥२२९॥

अथ शरपुङ्खानामगुणाः

शरपुङ्खा कालशाकं प्लीहारि कालको मतः ॥२३०॥
शरपुङ्खा यकृत्प्लीहदुष्टव्रणविषापहा ।
तिक्ता कषाया कासास्रश्वासज्वरहरा लघुः ॥२३१॥

अथ बलामोटानामगुणाः ।

बलामोटा जया सूक्ष्मपत्रा ज्ञेयापराजिता ॥२३२॥
बलामोटा विपक्षे बलकृच्छ्रनुद्विजयप्रदा ॥२३३॥

अथ सुदर्शनानामगुणाः ।

सुदर्शना सोमवल्ली चक्राङ्का मधुपर्णिका ॥२३४॥
सुदर्शना स्वादुरुष्णा कफशोफास्रवातजित् ॥२३५॥

अथ मयूरशिखानामगुणाः

मयूराङ्काशिखा ज्ञेया साहस्री मधुकच्छदा ॥२३६॥

मयूराङ्घ्रिशिखा लघ्वी पित्तश्लेष्मातिसारजित् ॥२३७॥

अथ लक्ष्मणानामगुणाः ।

लक्ष्मणा पुत्रदा रक्ता विन्दुपत्रा च नागिनी ।
गोक्षोरसदृशं पुष्पं रोमवल्लि समन्वितम् ।
रक्तबिन्दुसमं पुष्पं लक्ष्मणाकारमुच्यते ॥२३८॥
लक्ष्मणा गर्भदा शीता सरा हृष्या त्रिदोषनुत् ॥२३९॥

अथ मांसरोहिणीनामगुणाः ।

मांसरोहिण्यतिरुहा हृत्ता चर्मकसा वसा ॥२४०॥
स्यान्मांसरोहिणी हृष्या सरा दोषत्रयापहा ॥२४१॥

अथ अस्थिसंहारकनामगुणाः ।

अस्थिसंहारको वज्रवल्ली क्रौष्टुघण्टिका ।
वज्राङ्गी ग्रन्थिमान् वज्रमोक्ता स्यादस्थिशृङ्खला ॥२४२॥
अस्थिसंहारकः शीतो हृष्यो वातहरोऽस्थियुक् ॥२४३॥

अथ अर्कद्वयनामगुणाः ।

अर्कः सूर्याह्वयः क्षीरी सदापुष्पो विकर्णः ।
मन्दारो वसुकोऽलर्को राजार्को दीर्घपत्रकः ॥२४४॥
अर्कद्वयं शङ्खघातकुष्ठकण्डूविषव्रणान् ।
निहन्ति प्लीहगुल्मार्शोयकृत् श्लेष्मोदरक्रिमीन् ॥२४५॥

अथ करवीरद्वयनामगुणाः ।

करवीरोऽश्वहा श्वेतपुष्पः स्याच्छतपुष्पकः ।
रक्तपुष्पोऽपरश्चण्डो लगुडः करवीरकः ॥२४६॥
करवीरद्वयं नेत्रशोफकुष्ठव्रणापहम् ।
लघूष्णं क्रिमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥२४७॥

अथ धत्तूरनामगुणाः ।

धत्तूरः कितवो धूर्तो देवता मदनः शठः ।
उन्मत्तो मातुलस्तूरी तरकः कनकाह्वयः ॥२४८॥

धत्तूरो मदवर्णाग्निवान्तिकृज्ज्वरकुष्ठनुत् ।
उष्णो गुरुर्व्रणश्लेष्मकण्डूक्रिमिविषापहः ॥२४९॥

अथ कलिकारीनामगुणाः ।

कलिकारी वह्निमुखी लाङ्गली गर्भपातिनी ।
विशल्या हलिनी शीरी प्रभाता शुक्लपुष्पिका ॥२५०॥
विद्युज्ज्वालाऽग्निजिह्वा च कथिता पुष्पसौरभा ।
वह्निशिखाऽग्निका श्वेया नक्तरन्ध्री च सा स्मृता ॥२५१॥
कलिकारी सरा कुष्ठशोफार्शोव्रणशूलजित् ।
तीक्ष्णोष्णा क्रिमिनुल्लघ्वी पित्तला गर्भपातिनी ॥२५२॥

अथ कुमारीनामगुणाः ।

कुमारी मण्डला माता गृहकन्याऽतिपिच्छला ।
रसायनी कण्टकिनी सवराख्या वनोद्भवा ॥२५३॥
कुमारी भेदिनी शीता यकृत्प्लीहकफज्वरान् ।
निहन्ति ग्रन्थिविस्फोटपित्तरक्तत्वगामयान् ॥२५४॥

अथ भङ्गानामगुणाः ।

भङ्गाङ्गजा मातुलानी मोहिनी विजया जया ॥२५५॥
भङ्गा कफहरा तिक्ता ग्राहिणी दीपनी लघुः ।
तीक्ष्णोष्णा पित्तलानाहमदकृद्वाऽग्निवर्द्धिनी ॥२५६॥

अथ काश्चनीनामगुणाः ।

काश्चनी शोणफलिनी काकायुः काकवल्लरी ॥२५७॥
काश्चनी भ्रान्यदा मूर्छाभ्रमव्यथादोषत्रयापहा ॥२५८॥

अथ दूर्वाद्वयनामगुणाः ।

दूर्वा शम्या शीतकरी गोलोमी शतपर्विका ।
अन्या श्वेता शतसदण्डा भार्गवी दुर्मरा तथा ॥२५९॥
दूर्वा हिमा विसर्पास्रतृट्पित्तकफदाहजित् ॥२६०॥

अथ गण्डदूर्वानामगुणाः।

गण्डदूर्वा मत्स्यगन्धा मत्स्याक्षी शकुलादनी ॥२६१॥
गण्डदूर्वा हिमा लोहद्राविणी ग्राहिणी लघुः।
दाहतृष्णाबलासास्रकुष्ठपित्तज्वरापहा: ॥२६२॥

अथ काशनामगुणाः।

काशः सुकाण्डः काशेक्षुः क्षरीकः खेतचामरः।
इक्षुरिकेक्षुकाशश्च स चैवेक्षुरसः स्मृतः ॥२६३॥
काशक्षच्छाश्मदाहास्रपित्तक्षयकरो हिमः ॥२६४॥

अथ कुशनामगुणाः।

दर्भो दर्भिः कुशस्तीक्ष्णः सूच्यग्रो यज्ञभूषणः ॥२६५॥
दर्भः कृच्छ्राश्मतृट्पित्तवस्तिनुत् कफरक्तजित् ॥२६६॥

अथ मुञ्जनामगुणाः।

मुञ्जः शरा स्थूलदर्भो बाणाह्वो ब्रह्ममेखलः ॥२६७॥
मुञ्जोऽनुष्णो विसर्पास्रमूत्रवस्त्यक्षिरोगजित् ॥२६८॥

अथ नलनामगुणाः।

नलोरन्ध्री पुष्पमृत्युर्धमनोऽनन्तकः पिटः ॥२६९॥
नलो मूत्रार्त्तिदाहास्रकफपित्तविसर्पजित् ॥२७०॥

अथ वंशनामगुणाः।

वंशो वेणुः कीचकः स्यात् कर्मारस्त्वचिसारकः ॥२७१॥
वंशः सरो हिमः पित्तकफदाहास्रशोफजित्।
तत्करीरो गुरुर्भेदी श्लेष्मलो वातपित्तजित्।
तथाच भेदकोऽप्युष्णः कफघ्नो वातपित्तजित् ॥२७२॥

अथ जवानीनामगुणाः।

जवानी जवनी तीव्रा तुरुष्का मदकारिणी ॥२७३॥
जवानी जीवनी रूक्षा ग्राहिणी मादिनी गुरुः ॥२७४॥

अथ खसतिलनामगुणाः।

तिलभेदः खसतिलः शुभ्रपुष्पो लसत्फलः ॥३७५॥

हृष्यो बल्यः खसतिलः श्लेष्मलो वातजिद् गुरुः।

वल्कलस्तत्फलोद्भूतो रूक्षो ग्राही विशेषतः ॥३७६॥

अथ अहिफेननामगुणाः।

आफूकन्तद्‌भोद्भूतमहिफेनं सफेनकम् ॥३७७॥

आफूकं शोषणं ग्राहि श्लेष्मघ्नं वातपित्तलम् ॥३७८॥

अथ छिलिहिण्टनामगुणाः।

छिलिहिण्टो महामूलः पातालो गरुडाह्वयः ॥३७९॥

छिलिहिण्टं परं हृष्यः श्लेष्मलः पवनापहः ॥३८०॥

यो राज्ञां मुखतिलकः कटारमल्ल-

स्तेन श्रीमदननृपेण निर्मितेऽत्र।

ग्रन्थेऽभून्मदनविनोदनाम्नि पूर्णो

वर्गोऽयं ललितपदाङ्कितोऽभयादिः ॥३८१॥

इति अभयादिप्रथमवर्गः।

---

## अथ शुण्ठ्यादिवर्गः।

यो मद्रविराजितमध्यमनन्तं श्रीरुचिपरं परमपरमेष्ठम्।

श्रीमदनक्षितिनाथं सदा ते विष्णुपदं विपदं विनिहन्तु ॥१॥

अथ शुण्ठीनामगुणाः।

शुण्ठी विश्वौषधं विश्वं कटुभद्रं कटूकटम्।

महौषधं शृङ्गवेरं नागरं विश्वभेषजम् ॥२॥

शुण्ठी रुच्यामवातघ्नी पाचनी कटुका लघुः।

स्निग्धोष्णा मधुरा पाके कफवातविबन्धनुत् ॥३॥

हृद्या स्वर्या वमिश्वासकासशूलहृदामयान् ।
हन्ति श्लीपदशोफार्शआनाहोदरमारुतान् ॥४॥

अथ आर्द्रकनामगुणाः ।

कटूष्णं दीपनं हृद्यं रुच्यमार्द्रकनागरम् ।
श्वासकासवमीहिक्कावातश्लेष्मविबन्धनुत् ॥५॥
पाचनं रोचनं हृद्यं कटूष्णं वह्निदीपनम् ।
वातप्रकोपशमनं पाचनं शोथहृत् परम् ॥६॥
भोजनादौ सदा पथ्यं जिह्वाकण्ठविशोधनम् ।
अव्यक्तरसवीर्यत्वात् तत्परन्तु कफापहम् ॥७॥
काञ्जिकार्द्रं सलवणं दीपनं पाचनं परम् ।
वातप्रकोपशमनं हर्षणं लवणार्द्रकम् ॥८॥

अन्यदपि ।

आर्द्रकं शृङ्गवेरन्तन्महौषधमुदाहृतम् ।
आर्द्रकं नागरगुणं भेदनं दीपनं गुरु ॥९॥

अथ मरिचनामगुणाः ।

मरीच वल्लिज तीक्ष्णं मलिनं श्यामभूषणम् ॥१०॥
मरीचं कटुकं तीक्ष्णं दीपन कफवातनुत् ।
उष्णं पित्तकरं रूक्षं श्वासशूलक्रिमीन् जयेत् ॥११
तदार्द्रं मधुरं पाके नात्युष्णं कटुक गुरु ।
किञ्चित्तीक्ष्णगुणं श्लेष्मप्रसेकि स्यादपित्तलम् ॥१२॥

अथ पिप्पलीनामगुणा ।

पिप्पली चपला कृष्णा मागधी मगधा कणा ।
विश्वोपकुल्या वैदेही शौण्डी स्यात्तीक्ष्णतण्डुला ॥१३॥
पिप्पली दीपनी हृद्या स्वादुपाका रसायनी ।
अत्युष्णा कटुका स्निग्धा कफवातहरा लघुः ॥१४॥
पित्तला रेचनी हन्ति श्वासकासोदरज्वरान् ।

कुष्ठप्रमेहगुल्मार्शः श्लीहशूलाममारुतान् ।
आर्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः ॥१५॥

अथ त्र्यूषणचतुरूषणनामगुणाः ।

विश्वोपकुल्यामरिचैः त्र्यूषणं कटुकं कटु ।
व्योषं कटुत्रयं तत् स्यात् सग्रन्थि चतुरूषणम् ॥१६॥
त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान् ।
गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान् ॥१७॥

अथ पिप्पलीमूलनामगुणाः ।

कणामूलं कटुग्रन्थि· पिप्पलीमूलमूषणम् ।
षड्ग्रन्थि ग्रन्थिकं मूलं मागधं चटकाशिरः ॥१८॥
दीपनं पिप्पलीमूलं कटूष्णं पाचनं लघु ।
रूक्षं पित्तकरं भेदि कफवातोदरापहम् ॥१९॥

अथ चव्यतत्फलनामगुणाः ।

चव्यं चवणमुच्छिष्टश्चविका कोलवल्लिका ॥२०॥
पिप्पलीमूलवत् तस्याविशेषाद् गुदजापहम् ।
चव्यपुष्पं गरश्वासकासक्षयविनाशनम् ॥२१॥
तत्फलं श्रेयसी हस्तिमागधी गजपिप्पली ॥२२॥
गजकृष्णा कटुर्वातश्लेष्मनुत् वह्निवर्द्धिनी ।
उष्णा निहन्त्यतीसार श्वासकण्ठामयक्रिमीन् ॥२३॥

अथ चित्रकनामगुणाः ।

चित्रको हुतभुग् व्यालो दारुणो दहनोऽरुणः ।
अग्निमाली हवि.पाची वह्निनामा विशेषतः ॥२४॥
चित्रकः कटुकः पाके वह्निकृत्पाचनो लघुः ।
रूक्षोष्णो ग्रहणीकुष्ठशोफार्शः क्रमिकासजित् ।
श्लेष्मानिलहरो ग्राह्यो तच्छार्कं श्लेष्मवातनुत् ॥२५॥

अथ पञ्चकोलषडूषणनामगुणाः ।

पिप्पली मागधीमूलचव्यनागरचित्रकैः ।

पञ्चकोलं कफानाहगुल्मशूलारुचीन् जयेत् ॥२६॥

मरिचेनयुतं तत्तु षडूषणमुदाहृतम् ॥२७॥

अथ शतपुष्पादयनामगुणाः ।

शतपुष्पा शतच्छत्रा शताह्वा कारवी मिसिः ।

अवाक्पुष्पी त्वचि छत्रा सैनिका माणधीऽपरा ॥२८॥

शतपुष्पा लघुस्तीक्ष्णा पित्तकृद्दीपनी कटुः ।

उष्णा ज्वरानिलश्लेष्मव्रणशूलाक्षिरोगजित् ।

सैनिका तद्गुणा प्रोक्ता विशेषाद् योनिशूलहृत् ॥ २९॥

अथ मिश्रेयानामगुणाः ।

मिश्रेया मिश्रिशालीनी शालो शीतशिवा मता ॥३०॥

मिश्रेया दीपनी हृद्या बद्धविट्क्रिमिशुक्रनुत् ।

रूक्षोष्णा तत्फलं कासवमिश्लेष्मानिलान् जयेत् ॥३१॥

अथ वनमेथीनामगुणाः ।

मेथिका वस्तिका शेलुरहित्थो वनमेथिका ॥३२॥

अहित्थोऽल्पगुणस्तद्वत् वाजिनां स तु पूजितः ॥३३॥

अथ अजमोदानामगुणाः ।

अजमोदाऽत्युग्रगन्धा मोदा ब्रह्मि मयूरकः ।

खराह्वा कारवी मञ्जो वस्तमोदा च मर्कटः ॥ ३४ ॥

अजमोदा कटुस्तीक्ष्णा दीपनी कफवातनुत् ।

उष्णा विदाहिनी हृद्या वृष्या बलमला लघुः ।

नेत्रामयक्रमिच्छर्दिहिक्कावस्तिरुजो जयेत् ॥३५॥

अथ जीरकत्रितयनामगुणाः ।

जीरकं दीर्घकं शुक्लमजाजी कणजीरकम् ॥३६॥

जीरका अरणं कृष्णं वर्षाकाली सुगन्धिकम् ॥३७॥

कालिका बाष्पिका कुञ्चिः कारवी चोपकुञ्चिका।
पृथ्वीका सुसवी पृथ्वी स्थूलजाज्यूपकालिका ॥३८॥
जीरकत्रितयं रूक्षं कटूष्णं दीपनं लघु।
संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत्।
चक्षुष्यं पवनाध्मानगुल्मच्छर्दिबलासजित् ॥३९॥

अथ यवानीनामगुणाः।

यवानी दीप्यको दीप्यो दीपनीया यवानिका।
यवसाह्वोग्रगन्धा स्यात् यवाह्वा भूकदम्बकः ॥४०॥
यवानी पाचनी रुच्या तीक्ष्णोष्णा कटुका लघुः।
वातश्लेष्मोदरानाहगुल्मशूलक्रिमीन् जयेत् ॥४१॥

अथ यवानिका(खोरासानी)नामगुणाः।

यवानिका यवानी स्याच्चौहारी जन्तुनाशनः ॥४२॥
चौहारस्तत् गुणः प्रोक्तो विशेषात् क्रिमिनाशनः ॥४३॥

अथ अजगन्धानामगुणाः।

अजगन्धा पूतिकीटा वर्वरो पूतिवर्वरः।
कारवी खरपुष्पा च तुङ्गी पूतिमयूरिका ॥४४॥
अजगन्धा कटुस्तीक्ष्णा रूक्षा हृद्याऽग्निवर्द्धनी।
दृष्टिमान्द्यप्रदा लघ्वी शुक्रवातकफापहा ॥४५॥

अथ वचानामगुणाः।

वचोग्रगन्धा गोलोमी षड्ग्रन्था जटिला मता।
जटिला शतपर्वाऽन्या लोमशा हैमवत्यपि ॥४६॥
वचोष्णा कटुका तिक्ता वामनी स्वरवह्निकृत्।
अपस्मारकफोन्मादभूतशूलानिलान् जयेत् ॥४७॥

अथ हपुषानामगुणाः।

हपुषा वपुषा विस्रा विगन्धा विस्रगन्धिका ॥४८॥

हपुषा दीपनी तिक्ता कटूष्णा तुवरा गुरुः ।
पित्तोदरसमीरार्शोग्रहणीशोफगुल्मजित् ॥४९॥

अथ विडङ्गनामगुणाः ।

विडङ्गं जन्तुहननं क्रिमिघ्नं क्षुद्रतण्डुला ।
मूलघ्नी तण्डुला घोषा कराला मृगगामिनी ॥५०॥
विडङ्गं कटु तिक्तोष्णं रूक्षं वह्निकरं लघु ।
गुल्माध्मानोदरश्लेष्मक्रिमिवातविबन्धनुत् ॥५१॥

अथ धान्याकनामगुणाः ।

धान्याकं धान्यकं धान्यं धानेयञ्च वितुन्नकम् ।
कुस्तुम्बुरु तदार्द्रं तु धानी धानेयकालुका: ॥५२॥
धान्यकं तुवरं स्निग्धमवृष्यं मूत्रलं लघु ।
हृद्यं रूक्षं बद्धविट्कं स्वादु पाके त्रिदोषनुत् ॥५३॥
पाचनं श्वासकासासत्घ्णामार्शः क्रिमीन् जयेत् ।
आर्द्रन्तु तद्गुणा स्वादुर्विशेषात्पित्तनाशिनी ॥५४॥

अथ हिङ्गुपत्रीदयनामगुणाः ।

हिङ्गुपत्री पृथुस्रान्वी पृथ्वीका दारुपत्रिका ।
वाष्पिका कारवी तन्वी विल्विका दीर्घिका तथा ॥५५॥
हिङ्गुपत्रीऽपरा वेणुपत्री हिङ्गुशिवाटिका ।
जन्तुका रामठी नाडी पिण्डा हिङ्गुफला मता ॥५६॥
हिङ्गुपत्रीदयं हृद्य तीक्ष्णोष्णं पाचनं कटु ।
हृदवस्तिरुक् विबन्धार्शःश्लेष्मगुल्मानिलापहम् ॥५७॥

अथ हिङ्गुनामगुणाः ।

हिङ्गुबाह्लीकमत्युग्रं रामठं भूतनाशनम् ।
अगूढगन्धा जरणं जन्तुघ्नं सूपधूपनम् ॥५८॥
हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णोष्णं कफवातनुत् ।
शूलगुल्मोदरानाहक्रिमिजित् पित्तवर्द्धनम् ॥५९॥

